# गौतम धर्म सूत्र

वेदो धर्ममूलम् १ तद्विदां च स्मृतिशीले २ दृष्टो धर्मव्यतिक्रमः साहसं च महतां ३ अवरदौर्बल्यात् ४ तुल्यबलविरोधे विकल्पः ५ उपनयनं ब्राह्मणस्याष्टमे ६ नवमे पञ्चमे वा काम्यम् ७ गर्भादिः सङ्ख्या वर्षाणाम् ८ तद्द्वितीयं जन्म ९ तद्यस्मात्स आचार्यः १० वेदानुवचनाच्च ११ एकादशद्वादशयोः क्षत्रियवैश्ययोः १२ षोडशा-द्ब्राह्मणस्यापतिता सावित्री १३ द्वाविंशते राजन्यस्य द्व्यधिकाया वै-श्यस्य १४ मौञ्जीज्यामौर्वीसौत्र्यो मेखलाः क्रमेण १५ कृष्ण-रुरुबस्ताजिनानि १६ वासांसि शाणक्षौमचीरकुतपाः सर्वेषाम् १७ कार्पासं चाविकृतम् १८ काषायमप्येके १९ वार्क्षं ब्राह्मणस्य माञ्जि-ष्ठहारिद्रेइतरयोः २० बैल्वपालाशौ ब्राह्मणदण्डौ २१ आश्वत्थपैलवौ शेषे २२ यज्ञियो वा सर्वेषाम् २३ अपीडिता यूपवक्राः सशल्काः २४ मूर्धललाटनासाग्रप्रमाणाः २५ मुण्डजटिलशिखाजटाश्च २६ द्रव्यहस्तोच्छिष्टोऽनिधायाचामेत् २७ द्रव्यशुद्धिः परिमार्जनप्रदाहत-क्षणनिर्णेजनानितैजसमार्क्तिकदारवतान्तवानाम् २८ तैजसवदुपल-मणिशङ्खमुक्तानाम् २९ दारुवदस्थिभूम्योः ३० आवपनं च भूमेः ३१ चेलवद्रज्जुविदलचर्मणाम् ३२ उत्सर्गो वात्यन्तोपहतानाम् ३३ प्राङ्मुख उदङ्मुखो वा शौचमारभेत ३४ शुचौ देश आसीनो दक्षिणं बाहुं जा-न्वन्तराकृत्वा यज्ञोपवीत्या मणिबन्धनात्पाणी प्रक्षाल्य वाग्यतोहृदय-स्पृशस्त्रिश्चतुर्वापाचामेद् ३५ द्विः परिमृज्यते ३६ पादौ चाभ्युक्षेत् ३७ खानि चोपस्पृशेच्छीर्षण्यानि ३८ मूर्धनि च दद्यात् ३९ सुप्त्वा भुक्त्वा क्षुत्वा च पुनः ४० दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात् ४१ प्राक्च्युतेरित्येके ४२ च्युतेश्वास्त्रावविद्याान्निगिरन्नेव तच्छुचिः ४३ न मुख्या विप्रुषोच्छिष्टं कुर्वन्ति न चेदङ्गेनिपतन्ति ४४ लेपगन्धा-पकर्षणे शौचममेध्यस्य ४५ तदद्भिः पूर्वं मृदा च ४६ मूत्रपुरीष-स्नेहविस्त्रंसनाभ्यवहारसंयोगेषु च ४७ यत्र चाम्नायो विदध्यात् ४८ पाणिना सव्यमुपसङ्गृह्यानङ्गुष्ठमधीहि भोइत्यामन्त्रयेद्गुरुं तत्रचक्षुर्मनः-

प्राणोपस्पर्शनं दर्भैः ४९ प्राणायामास्त्रयः पञ्चदशमात्राः ५० प्राक्कूले-ष्वासनं च ५१ ओं पूर्वा व्याहृतयः पञ्च सत्यान्ताः ५२ गुरोः पादोप-संग्रहणं प्रातः ५३ ब्रह्मानुवचने चाद्यन्तयोः ५४ अनुज्ञात उपवि-शेत्प्राङ्मुखो दक्षिणतः शिष्योदङ्मुखोवा ५५ सावित्री चानुवचनम् ५६ आदितो ब्रह्मण आदाने ५७ ओंकारोऽन्यत्रापि ५८ अन्तर गमने पुनरुपसदनम् ५९ श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासोवि-प्रवासश्च ६० प्राणायामा घृतप्राशनं चेतरेषाम् ६१ श्मशानाभ्यध्ययने चैवम् ६२ १

प्रागुपनयनात्कामचारः कामवादः कामभक्षः १ अहुतात् २ ब्रह्मचारी ३ यथोपपादित मूत्रपुरीषो भवति ४ नास्याचमनकल्पो विद्यते ५ अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः ६ न तदुपस्पर्शनादाशौचम् ७ न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात् ८ न ब्रह्माभिव्याहारयेद्। अन्यत्र स्वधानिनयनात् ९ उपनयनादिर्नियमः १० उक्तं। ब्रह्मचर्यम् ११ अग्नीन्धनभैक्षचरणे १२ सत्यवचनम् १३ अपामुपस्पर्शनम् १४ एके गोदानादि १५ बहिःसंध्यत्वं च १६ तिष्ठेत् । पूर्वामासीतोत्तरां सज्योतिष्या ज्योतिषोदर्शनाद्वाग्यतः १७ नादित्यमीक्षेत १८ वर्जयेन् । मधुमांसगन्धमाल्यदिवास्वप्नाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभ-मोहवादवादनस्नानदन्तधावनहर्षनृत्य गीतपरिवादभयानि १९ गुरु-दर्शनेकण्ठप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि २० निष्ठीवित-हसितविष्कम्भितावस्फोतनानि २१ स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायाम् २२ द्यूतं हीनसेवामदत्तादानं हिंसाम् २३ आचार्यतत्पुत्रस्त्रीदीक्षित-नामानि २४ शुक्लवाचो मद्यं नित्यंब्राह्मणः २५ अधःशय्यासनी पूर्वोत्थायी जघन्यसंवेशी २६ वाग्बाहूदरसंयतः २७ नामगोत्रे गुरोः समानतो निर्दिशेत् २८ अर्चिते श्रेयसि चैवम् २९ शय्यासनस्थानानि विहाय । प्रतिश्रवणम् ३० अभिक्रमणं वचनाददृष्टेन ३१ अधः-स्थानासनस्तिर्यग्वातसेवायां गुरुदर्शनेचोत्तिष्ठेत् ३२ गच्छन्तमनुव्रजेत् ३३ कर्म विज्ञाप्याख्याय ३४ आहुतोऽध्यायी ३५ युक्तः प्रियहितयोः

३६ तद्भार्यापुत्रेषु चैवम् ३७ नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षाल-नोन्मर्दनोपसङ्ग्रहणानि ३८ विप्रोष्योपसङ्ग्रहणं गुरुभार्याणाम् ३९ नैके युवतीनां व्यवहारप्राप्तेन ४० सार्ववर्णिकभैक्षचरणमभिशस्तपतित-वर्जम् ४१ आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुक्रमेण ४२ आचार्यज्ञातिगुरुष्वलाभेऽन्यत्र ४३ तेषां पूर्वं पूर्वं परिहरेत् ४४ निवेद्य गुरवेऽनुज्ञातो भुञ्जीत ४५ असंनिधौतद्भार्यापुत्रसब्रह्मचारिभ्यः ४६ वाग्यतस्तृप्यन्नलोलुप्यमानः संनिधायोदकम् ४७ शिष्यशिष्टिरवधेन ४८ अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम् ४९ अन्येन घ्नन्राज्ञा शास्यः ५० द्वादश वर्षाण्येकवेदे ब्रह्मचर्यं चरेत् ५१ प्रतिद्वादश वा सर्वेषु ५२ ग्रहणान्तं वा ५३ विद्यान्ते गुरुरर्थेन निमन्त्र्यः ५४ कृत्वानुज्ञातस्य वा स्नानम् ५५ आचार्यः श्रेष्ठो गुरूणांमातेत्येके ५६ २

तस्याश्रमविकल्पमेके ब्रुवते १ ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः २ तेषां गृहस्थो योनिरप्रजनत्वादितेरेषाम् ३ तत्रोक्तं ब्रह्मचारिणः ४ आचार्याधीनत्वमान्तम् ५ गुरोः कर्मशेषेण जपेत् ६ गुर्वभावे तद-पत्यवृत्तिस्तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा ७ एवंवृत्तो ब्रह्मलो-कमाप्नोति जितेन्द्रियः ८ उत्तरेषां चैतदविरोधि ९ अनिचयो भिक्षुः १० ऊर्ध्वरेताः ११ ध्रुवशीलो वर्षासु १२ भिक्षार्थी ग्राममियात् १३ जघन्यमनिवृत्तं चरेत् १४ निवृत्ताशीः १५ वाक्चक्षुःकर्मसंयतः १६ कौपीनाच्छादनार्थे वासो बिभृयात् १७ प्रहीणमेके निर्णिज्य १८ नाविप्रयुक्तमोषधिवनस्पतीनामङ्गमुपाददीत १९ न द्वितीयामपर्तु रात्रिं ग्रामे वसेत् २० मुण्डः शिखी वा २१ वर्जयेद् । बीजवधम् २२ समो भूतेषु हिंसानुग्रहयोः २३ अनारम्भी २४ वैखानसो वने मूलफ-लाशी तपःशीलः २५ श्रावणकेनाग्निमाधाय २६ अग्राम्यभोजी २७ देवपितृमनुष्यभूतर्षिपूजकः २८ सर्वातिथिः प्रतिषिद्धवर्जम् २९ वै-ष्कमप्युपयुञ्जीत ३० न फालकृष्टमधितिष्ठेत् ३१ ग्रामं च न प्रविशेत् ३२ जटिलश्चीराजिनवासाः ३३ नातिसंवत्सरं भुञ्जीत ३४ एकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य गार्हस्थ्यस्य ३५ ३

गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वांयवीयसीम् १ असमानप्रवरैर्विवाहः २ ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चमातृबन्धुभ्यः पञ्चमात् ३ ब्राह्मो विद्याचारित्रबन्धुशीलसंपन्नाय दद्यादाच्छाद्यालंकृताम् ४ संयोगमन्त्रः प्राजापत्ये सह धर्मश्चर्यतामिति ५ आर्षे गोमिथुनं कन्यावते दद्यात् ६ अन्तर्वेद्यृत्विजे दानं दैवोऽलंकृत्य ७ इच्छन्त्याः स्वयं संयोगो गान्धर्वः ८ वित्तेनानतिः स्त्रीमतामासुरः ९ प्रसह्यादानाद्राक्षसः १० असंविज्ञातोपसंगमात्पैशाचः ११ चत्वारो धर्म्याः प्रथमाः १२ षड् इति एके १३ अनुलोमानन्तरैकान्तरद्व्यन्तरासु ज्ञाताःसवर्णाम्बष्ठोग्रनिषाददौष्मन्तपारशवाः १४ प्रतिलोमास्तुसूतमागधायोगवकृतवैदेहकचण्डालाः १५ ब्राह्मण्यजीजनत् । पुत्रान्वर्णेभ्य आनुपूर्व्याद्ब्राह्मणसूतमागधचण्डालान् १६ तेभ्य एव क्षत्रियामूर्धावसिक्थक्षत्रियधीवरपुल्कसांस्तेभ्य एव वैश्याभृज्ञकण्ठमाहिष्यवैश्यवैदेहान्पारशवयवनकरणशूद्राञ्शूद्रेत्येके १७ वर्णान्तरगमनमुत्कर्षापकर्षाभ्यांसप्तमे पञ्चमे वाचार्याः १८ सृष्ट्यन्तरजातानां च १९ प्रतिलोमास्तु धर्महीनाः २० शूद्रायां च २१ असमानायां तु शूद्रात्पतितवृत्तिः २२ अन्त्यः पापिष्ठः २३ पुनन्ति साधवः पुत्राः २४ त्रिपुरुषमार्षात् २५ दश दैवाद्दशैव प्राजापत्यात् २६ दश पूर्वान्दश परानात्मानं चब्राह्मीपुत्रो ब्राह्मीपुत्रः २७ ४

ऋतावुपेयात् १ सर्वत्र वा प्रतिषिद्धवर्जम् २ देवपितृमनुष्यभूतर्षिपूजकः ३ नित्यस्वाध्यायः ४ पितृभ्यश्चोदकदानं यथोत्साहमन्यत् ५ भार्यादिरग्निर्दायादिर्वा ६ तस्मिन्गृह्याणि कर्माणि ७ देवपितृमनुष्ययज्ञाः स्वाध्यायश्च बलिकर्म ८ अग्नावग्निर्धन्वन्तरिर्विश्वे देवाः प्रजापतिःस्विष्टकृदिति होमः ९ दिग्देवताभ्यश्च यथास्वम् १० द्वार्षु महद्भ्यः ११ गृहदेवताभ्यः प्रविश्य १२ ब्रह्मणे मध्ये अद्भ्य उदकुम्भे १३ आकाशायेत्यन्तरिक्षे बलिरुत्क्षेप्यः १४ नक्तंचरेभ्यश्च सायम् १५ स्वस्तिवाच्य भिक्षादानमप्पूर्वम् १६ ददातिषु चैवं धर्म्येषु १७

समद्विगुणसाहस्रानन्त्यानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः १८ गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि १९ भिक्षमाणेषु कृतान्नमितरेषु २० प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् २१ क्रुद्धहृष्टभीतार्तलुब्धबालस्थविरमूढमत्तोन्मत्तवाक्यान्यनृतान्यपातकानि २२ भोजयेत्पूर्वमतिथिकुमारव्याधितगर्भिणीस्ववासिनीस्थविराञ् जघन्यांश् २३ आचार्यपितृसखीनां च निवेद्य पचनक्रिया २४ ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थानेमधुपर्कः २५ सम्वत्सरे पुनः २६ यज्ञविवाहयोरर्वाक् २७ राज्ञश्च श्रोत्रियस्य २८ अश्रोत्रियस्यासनोदके २९ श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्चप्रकारयेत् ३० नित्यं वा संस्कारविशिष्टम् ३१ मध्यतोऽन्नदानमवैद्ये साधुवृत्ते ३२ विपरीतेषुतृणोदकभूमिस्वागतमन्ततः पूजानत्याशश्च ३३ शय्यासनावसथानुव्रज्योपासनानि सदृक्श्रेयसोःसमानानि ३४ अल्पशोऽपि हीने ३५ असमानग्रामोऽतिथिरेकरात्रिकोऽधिवृक्षसूर्योपस्थायी ३६ कुशलानामयारोग्याणामनुप्रश्नः ३७ अन्त्यं शूद्रस्य ३८ ब्राह्मणस्यानतिथिरब्राह्मणः ३९ यज्ञे संवृतश्चेत् ४० भोजनं तु क्षत्रियस्योर्ध्वं ब्राह्मनेभ्यः ४१ अन्यान्भृत्यैः सहानृशंस्यार्थमानृशंस्यार्थम् ४२ ५

पादोपसम्ग्रहणं समवायेऽन्वहम् १ अभिगम्य तु विप्रोष्य २ मातृपितृतद्बन्धूनां पूर्वजानां विद्यागुरूणांतद्गुरूणां च ३ संनिपाते परस्य ४ स्वनाम प्रोच्याहमयमित्यभिवादोज्ञसमवाये ५ स्त्रीपुंयोगेऽभिवादतोऽनियममेके ६ नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्याभगिनीनाम् ७ नोपसंग्रहणं भ्रातृभार्याणां स्वसृणाम् ८ ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसांप्रत्युत्थानमभिवाद्याः ९ तथान्यः पूर्वः पौरोऽशीतिकावरःशूद्रोऽप्यपत्यसमेन १० अवरोऽप्यार्यः शूद्रेण ११ नाम वास्य वर्जयेत् १२ राज्ञश्चाजपः प्रेष्यः १३ भो भवन्निति वयस्यः समानेऽहनि जातः १४ दशवर्शवृद्धः पौरः पञ्चभिःकलाभरः श्रोत्रियश्चारणस्त्रिभिः १५ राजन्यवैश्यकर्मा विद्याहीनाः १६ दीक्षितश्च प्राक् क्रयात् १७ वित्तब-

न्धुकर्मजातिविद्यावयांसि मान्यानिपरबलीयांसि १८ श्रुतं तु सर्वेभ्यो गरीयः १९ तन्मूलत्वाद्धर्मस्य श्रुतेश्च २० चक्रिदशमीस्थानुग्राह्यवधूस्नातकराजभ्यः पथोदानम् २१ राज्ञा तु श्रोत्रियाय श्रोत्रियाय २२ ६

आपत्कल्पो ब्राह्मनस्याब्राह्मणाद्विद्योपयोगः १ अनुगमनं शुश्रूषा २ समाप्ते ब्राह्मणो गुरुः ३ याजनाध्यापनप्रतिग्रहाः सर्वेषाम् ४ पूर्वः पूर्वो गुरुः ५ तदलाभे क्षत्रवृत्तिः ६ तदलाभे वैश्यवृत्तिः ७ तस्यापण्यम् ८ गन्धरसकृतान्नतिलशानक्षौमाजिनानि ९ रक्तनिर्णिक्ते वाससी १० क्षीरं सविकारम् ११ मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि १२ पशवश्च हिंसासंयोगे १३ पुरुशवशाकुमारीवेहतश्च नित्यम् १४ भूमिव्रीहियवाजाव्यश्वऋृषभधेन्वनडुहश्चैके १५ नियमस्तु १६ रसानां रसैः १७ पशूनां च १८ न लवणकृतान्नयोः १९ तिलानां च २० समेनामेन तु पक्वस्य संप्रत्यर्थे २१ सर्वथा वृत्तिरशक्तावशौद्रेण २२ तदप्येके प्राणसंशये २३ तद्वर्णसंकराभक्ष्यनियमस्तु २४ प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत २५ राजन्यो वैश्यकर्म २६ ७

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः १ तयोश्चतुर्विधस्य मनुष्यजातस्यान्तःसंज्ञानाम्चलनपतनसर्पणानामायत्तं जीवनम् २ प्रसूतिरक्षणमसंकरो धर्मः ३ स एव बहुश्रुतो भवति ४ लोकवेदवेदाङ्गवित् ५ वाकोवाक्येतिहासपुराणकुशलः ६ तदपेक्षस्तद्वृत्तिः ७ चत्वारिंशत्संस्कारैः संस्कृतः ८ त्रिषु कर्मस्वभिरतः ९ षट्सु वा १० सामयाचारिकेष्वभिविनीतः ११ षड्भिः परिहार्यो राज्ञा १२ अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति १३ गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम् १४ चत्वारि वेदव्रतानि १५ स्नानं सहधर्मचारिणीसंयोगः १६ पञ्चानां यज्ञानामनुष्ठानंदेवपितृमनुष्यभूतब्राह्मणाम् १७ एतेषां च १८ अष्टका पार्वणः श्राद्धम्श्रावण्याग्रहायणीचैत्र्याश्वयुज्यिति सप्त पाकयज्ञसमस्थाः १९ अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि

निरूढपशुबन्धः सौत्रामरियति सप्तहविर्यज्ञसम्स्थाः २० अग्निष्टोमो-ऽत्यग्निष्टोम उक्थ्यः षोडशीवाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोम-संस्थाः २१ इत्येते चत्वारिंशत्संस्काराः २२ अथाष्टावात्मगुणाः २३ दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासोमङ्गलमकार्पणयमस्पृहेति २४ यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणान स ब्रह्मणः सायुज्यं सालोक्यं गच्छति २५ यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टा-वात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं चगच्छति २६ ८

स विधिपूर्वकं स्नात्वा भार्यामधिगम्ययथोक्तान्गृहस्थधर्मान्प्रयुञ्जान इमानि व्रतान्यनुकर्षेत् १ स्नातकः २ नित्यं शुचिः सुगन्धिः स्नानशीलः ३ सति विभवे न जीर्णमलवद्वासाः स्यात् ४ न रक्तमुल्बणमन्यधृतं वासो बिभृयात् ५ न स्रगुपानहौ ६ निर्णिक्तमशक्तौ ७ न रू-ढश्मश्रुरकस्मात् ८ नाग्निमपश्च युगपद्धारयेत् ९ नाञ्जलिना पिबेत् १० न तिष्ठन्नुद्धतोदकेनाचमेत् ११ न शूद्राशुच्येकपाणयावर्जितेन १२ न वाय्वग्न्यृविप्रादित्यापो देवता गाश्च प्रतिपश्यन्वा मूत्रपुरीषा-मेध्यान्व्युदस्येत् १३ नैता देवताः प्रति पादौ प्रसारयेत् १४ न पर्ण-लोष्टाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात् १५ न भस्मकेशनखतुषकपा-लमेध्यान्यधितिष्ठेत् १६ न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत १७ संभाष्य पुणयकृतो मनसा ध्यायेत् १८ ब्राह्मणेन वा सह संभाषेत १९ अधेनुं धेनुभव्येति ब्रूयात् २० अभद्रं भद्रमिति २१ कपालं भगालमिति २२ मणिधनुरित्यिन्द्रधनुः २३ गां धयन्तीं परस्मै नाचक्षीत २४ न चैनाम्वारयेत् २५ न मिथुनी भूत्वा शौचं प्रति विलम्बेत २६ न च तस्मिन्शयने स्वाध्यायमधीयीत २७ न चापररात्रमधीत्य पुनः प्रति-संविशेत् २८ नाकल्पां नारीमभिरमयेत् २९ न रजस्वलाम् ३० न चैनां श्लिष्येन्न कन्याम् ३१ अग्निमुखोपधमनविगृह्यवादबहिर्गन्ध-माल्यधारणपापीयसावलेखनभार्यासहभोजनाञ्जन्त्यवेक्षणकुद्वारप्रवे-शनपादपादधावनासन्दीस्थभोजननदीबाहुतरणवृक्षविषमारोहणाव-रोहणप्राणव्यायच्छनानि वर्जयेत् ३२ न सन्दिग्धां नावमधिरोहेत् ३३

सर्वत एवात्मानं गोपायेत् ३४ न प्रावृत्य शिरोऽहनि पर्यटेत् ३५ प्रावृत्य रात्रौ ३६ मूत्रोच्चारे च ३७ न भूमावनन्तर्धाय ३८ नाराच् चावसथात् ३९ न भस्मकरीषकृष्टच्छायापथिकाम्येषु ४० उभे मूत्र-पुरीषे तु दिवा कुर्यादुदङ्मुखः ४१ संध्ययोश्च ४२ रात्रौ दक्षिणामुखः ४३ पालाशमासनं पादुके दन्तधावनमिति च वर्जयेत् ४४ सोपान-त्करश्चासनाभिवादननमस्कारान्वर्जयेत् ४५ न पूर्वाह्णमध्यंदिनापरा-ह्णानफलान्कुर्याद् ४६ न नग्नां परयोषितमीक्षेत ४८ न पदासनमाकर्षेत् ४९ न शिश्नोदरपाणिपादवाक्चक्षुश्चापलानि कुर्यात् ५० छेदनभेद-नविलेखनविमर्दनावस्फोटनानिनाकस्मात्कुर्यात् ५१ नोपरि वत्सत-न्तीं गच्छेत् ५२ न कुलंकुलः स्यात् ५३ न यज्ञमवृतो गच्छेत् ५४ दर्शनाय तु कामम् ५५ न भक्षानुत्सङ्गे भक्षयेत् ५६ न रात्रौ प्रेष्याहृतम् ५७ उद्धृतस्नेहविलपनपिण्याकमथितप्रभृतीनिचात्तवीर्याणि नाश्नी-यात् ५८ सायंप्रातस्त्वन्नमभिपूजितमनिन्दन्भुञ्जीत ५९ न कदाचिद्रात्रौ नग्नः स्वपेत् ६० स्नायाद्वा ६१ यच् चात्मवन्तो वृद्धाः सम्यग्वि-नीतादम्भलोभमोहवियुक्ता वेदविद आचक्षते तत्समाचरेत् ६२ योग-क्षेमार्थमीश्वरमधिगच्छेत् ६३ नान्यमन्यत्र देवगुरुधार्मिकेभ्यः ६४ प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्यजन भूयिष्ठमनलससमृद्धं धार्मिकाधिष्ठितं निकेतनमावसितुं यतेत ६५ प्रशस्तमङ्गल्यदेवताय-तनचतुष्पदम्प्रदक्षिणमावर्तेत ६६ मनसा वा तत्समग्रमाचारमनुपा-लयेदापत्कल्पः ६७ सत्यधर्मा ६८ आर्यवृत्तिः ६९ शिष्टाध्यापकः ७० शौचशिष्टः ७१ श्रुतिनिरतः स्यात् ७२ नित्यमहिंस्रो मृदुर्दृढकारी दमदानशीलः ७३ एवमाचारो मातापितरौ पूर्वापरांश्च सम्बन्धान्दुरि-तेभ्यो मोक्षयिष्यन्स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते न च्यवते ७४ ९ १

द्विजातीनामध्ययनमिज्या दानम् १ ब्राह्मनस्याधिकाः प्रवचनयाज-नप्रतिग्रहाः २ पूर्वेषु नियमस्तु ३ आचार्यज्ञातिप्रियगुरुधनविद्या-नियमेषु ब्रह्मणः संप्रदानमन्यत्र यथोक्तात् ४ कृषिवाणिज्ये वास्वयंकृते

५ कुसीदं च ६ राज्ञोऽधिकं रक्षणं सर्वभूतानाम् ७ न्याय्यदण्डत्वम् ८ बिभृयाद्ब्राह्मणाञ् श्रोत्रियान् ९ निरुत्साहांश्च ब्राह्मणान् १० अकरांश्च ११ उपकुर्वाणांश्च १२ योगश्च विजये १३ भये विशेषेण १४ चर्या च रथधनुर्भ्याम् १५ सङ्ग्रामे संस्थानमनिवृत्तिश्च १६ न दोषो हिंसायामाहवे १७ अन्यत्रव्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षाधिरूढदूतगोब्राह्मणवादिभ्यः १८ क्षत्रियश्चेदन्यस्तमुपजीवेत्तद्वृत्त्या १९ जेता लभेत सांग्रामिकं वित्तम् २० वाहनं तु राज्ञः २१ उद्धारश्चापृथग्जये २२ अन्यत्तु यथार्हं भाजयेद्राजा २३ राज्ञो बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा २४ पशुहिरण्ययोरप्येके पञ्चाशद्भागः २५ विंशतिभागः शुल्कः पण्ये २६ मूलफलपुष्पौषधमधुमांसतृनेन्धनानांषष्ठः २७ तद्रक्षणधर्मित्वात् २८ तेषु तु नित्ययुक्तः स्यात् २९ अधिकेन वृत्तिः ३० शिल्पिनो मासि मास्येकैकं कर्म कुर्युः ३१ एतेनात्मनोपजीविनोव्याख्याताः ३२ नौचक्रीवन्तश्च ३३ भक्तं तेभ्यो दद्यात् ३४ पण्यं वणिग्भिरर्थापचयेन देयम् ३५ प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः ३६ विख्याप्य संवत्सरं राज्ञा रक्ष्यम् ३७ ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः ३८ स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ३९ ब्राह्मणस्याधिकं लब्धम् ४० क्षत्रियस्य विजितम् ४१ निर्विष्टं वैश्यशूद्रयोः ४२ निध्यधिगमो राजधनम् ४३ ब्राह्मणस्याभिरूपस्य ४४ अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके ४५ चौरहृतमपजित्य यथास्थानं गमयेत् ४६ कोशाद्वा दद्यात् ४७ रक्ष्यं बालधनमा व्यवहारप्रापणात् ४८ समावृत्तेर्वा ४९ वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यकुसीदम् ५० शूद्रश्चतुर्थो वर्ण एकजातिः ५१ तस्यापि सत्यमक्रोधः शौचम् ५२ आचमनार्थे पाणिपादप्रक्षालनमेवैके ५३ श्राद्धकर्म ५४ भृत्यभरणम् ५५ स्वदारवृत्तिः ५६ परिचर्या चोत्तरेषाम् ५७ तेभ्यो वृत्तिं लिप्सेत ५८ तत्र पूर्वं पूर्वं परिचरेत् ५९ जीर्णान्युपानह् छत्रवासःकूर्चादीनि ६० उच्छिष्टाशनम् ६१ शिल्पवृत्तिश्च ६२ यं चार्यमाश्रयेद्भर्तव्यस्तेन क्षीणेऽपि ६३ तेन चोत्तरः ६४ तदर्थोऽस्य निचयः स्यात् ६५ अनुज्ञातोऽस्य नमस्कारो मन्त्रः ६६

पाकयज्ञैः स्वयं यजेतेत्येके ६७ सर्वे चोत्तरोत्तरं परिचरेयुः ६८ आर्यानार्ययोर्व्यतिक्षेपे कर्मणः साम्यं ६९ १

राजा सर्वस्येष्टे ब्राह्मनवर्जम् १ साधुकारी साधुवादी २ त्रय्या- मान्वीक्षिक्या वाभिविनीतः ३ शुचिर्जितेन्द्रियो गुणवत्सहायोपा- यसंपन्नः ४ समः प्रजासु स्यात् ५ हितमासां कुर्वीत ६ तमुप- र्यासीनमधस्तादुपासीरन्नन्येब्राह्मणेभ्यः ७ तेऽप्येनं मन्येरन् ८ वर्णा- नाश्रमांश्च न्यायतोऽभिरक्षेत् ९ चलतश्चैतान्स्वधर्मे स्थापयेत् १० धर्मस्य ह्यंशभाग् भवतीति ११ ब्राह्मनं च पुरोदधीतविद्याभिजनवाग्रूपवयः- शीलसंपन्नं न्यायवृत्तं तपस्विनम् १२ तत्प्रसूतः कर्माणि कुर्वीत १३ ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति चविज्ञायते १४ यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत १५ तदधीनमपि ह्येके योगक्षेमं प्रतिजानते १६ शान्तिपुण्याहस्वस्त्ययनायुष्मन्मङ्गलसंयुक्तान्याभ्युद- यिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि चशालाग्नौ कुर्यात् १७ यथोक्तमृत्विजोऽन्यानि १८ तस्य च व्यवहारो वेदो धर्मशा- स्त्राण्यङ्गान्युपवेदाः पुराणम् १९ देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् २० कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे २१ तेभ्यो यथाधिकारमर्थान्प्रत्यवहृत्यधर्मव्यवस्था २२ न्यायाधिगमे तर्कोऽभ्युपायः २३ तेनाभ्यूह्य यथास्थानं गमयेत् २४ विप्रतिपत्तौ त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्यनिष्ठां गमयेत् २५ तथा ह्यस्य निःश्रेयसं भवति २६ ब्रह्म क्षत्रेण संपृक्तं देवपितृमनुष्यान्धारयतीति विज्ञायते २७ दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत् २८ वर्णाश्रमाः स्वस्व- धर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेन विशिष्टदेशजातिकुल- रूपायुःश्रुतचित्रवित्तसुखमेधसो २९ जन्म प्रतिपद्यन्ते २९ विष्वञ्चो विपरीता नश्यन्ति ३० तानाचार्योपदेशो दण्डश्च पालयते ३१ तस्मा- द्राजाचार्यावनिन्द्यावनिन्द्यौ ३२ २

शूद्रो द्विजातीनभिसंधायाभिहत्य चवाग्दण्डपारुष्याभ्यामङ्गमोच्यो

येनोपहन्यात् १ आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च २ गोप्ता चेद्वधोऽधिकः ३ अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यांश्रोत्रप्रति- पूरणमुदाहरणे जिह्वाच्छेदो धारणेशरीरभेदः ४ आसनशयनवाक्पथिषु समप्रेप्सुर्दण्डयः ५ शतं क्षत्रियो ब्राह्मणाक्रोशे । दण्डपारुष्ये द्विगुणम् ६ अध्यर्धं वैश्यः ७ ब्राह्मणस्तु क्षत्रिये पञ्चाशत् ८ तदर्धं वैश्ये ९ न शूद्रे किंचित् १० ब्राह्मणराजन्यवत्क्षत्रियवैश्यौ ११ अष्टापाद्यं स्ते- यकिल्बिषं शूद्रस्य १२ द्विगुणोत्तराणीतरेषां प्रतिवर्णम् १३ विदुषो- ऽतिक्रमे दण्डभूयस्त्वम् १४ फलहरितधान्यशाकादाने पञ्चकृ- ष्णलमल्पम् १५ पशुपीडिते स्वामिदोषः १६ पालसंयुक्ते तु तस्मिन् १७ पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः १८ पञ्च माषा गवि १९ षड् उष्ट्रखरे २० अश्वमहिष्योर्दश २१ अजाविषु द्वौ द्वौ २२ सर्वविनाशे शदः २३ शिष्टाकरणे प्रतिषिद्धसेवायां च नित्यंचैलपिण्डादूर्ध्वं स्वह- रणम् २४ गोऽग्न्यर्थे तृणमेधान्वीरुध्वनस्पतीनां चपुष्पाणि स्ववदा- ददीत फलानि चापरिवृतानाम् २५ कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी मासम् २६ नातिसांवत्सरीमेके २७ चिरस्थाने द्वैगुण्यं प्रयोगस्य २८ भुक्ताधिर्न वर्धते २९ दित्सतोऽवरुद्धस्य च ३० चक्रकालवृद्धिः ३१ कारिताकायिकाशिखाधिभोगाश्च ३२ कुसीदं पशूपजलोमक्षेत्रशदवाह्येषु नातिपञ्चगुणम् ३३ अजडापौगण्डधनं दशवर्षभुक्तं परैः संनिधौभोक्तुः ३४ न श्रोत्रियप्रव्रजितराजपुर्षैः ३५ पशुभूमिस्त्रीणामनतिभोगः ३६ रिक्थभाज ऋणं प्रतिकुर्युः ३७ प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डाः पुत्रान्नाभ्याभवेयुः ३८ निध्यन्वाध्य्याचितावक्रीताधयो नष्टाह् सर्वाननिन्दितान्पुरुषापराधेन ३९ स्तेनः प्रकीर्णकेषो मुसली राजानमियात्कर्माचक्षानः ४० पूतो वधमोक्षाभ्याम् ४१ अघ्नन्नेनस्वी राजा ४२ न शारीरो ब्राह्मणदण्डः ४३ कर्मवियोगविख्यापनविवासनाङ्ककरणानि ४४ अप्रवृत्तौ प्रायश्चित्ती सः ४५ चोरसमः सचिवो मतिपूर्वे ४६ प्रतिग्रहीता- प्यधर्मसंयुक्ते ४७ पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः ४८ अनुज्ञानं वा वेदवित्समवायवचनाद्वेदवित्समवायवचनात् ४९ ३

विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था १ बहवः स्युरनिन्दिताः स्वकर्मसु प्रात्ययिका राज्ञांनिष्प्रीत्यनभितापाश्चान्यतरस्मिन् २ अपि शूद्राः ३ ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्योऽनिबद्धश्चेत् ४ नासमवेतापृष्टाः प्रब्रूयुः ५ अवचनेऽन्यथावचने च दोषिणः स्युः ६ स्वर्गः सत्यवचने विपर्यये नरकः ७ अनिबद्धैरपि वक्तव्यम् ८ न पीडाकृते निबन्धः ९ प्रमत्तोक्ते च १० साक्षिसभ्यराजकर्तृषु दोषो धर्मतन्त्रपीडायाम् ११ शपथेनैके सत्यकर्म १२ तद्देवराजब्राह्मणसंसदि स्यादब्राह्मणानाम् १३ क्षुद्रपश्वनृते साक्षी दश हन्ति १४ गोश्वपुरुषभूमिषु दशगुणोत्तरान् १५ सर्वं वा भूमौ १६ हरणे नरकः १७ भूमिवदप्सु १८ मैथुनसंयोगे च १९ पशुवन्मधुसर्पिषोः २० गोवद्वस्त्रहिरण्यधान्यब्रह्मसु २१ यानेषु अश्ववत् २२ मिथ्यावचने याप्यो दण्ड्यश्च साक्षी २३ नानृतवचने दोषो जीवनं चेत्तदधीनम् २४ न तु पापीयसो जीवनम् २५ राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित् २६ प्राड्विवाकमध्याभवेत् २७ संवत्सरं प्रतीक्षेताप्रतिभायाम् २८ धेन्वनडुत्स्त्रीप्रजननसंयुंक्ते चशीघ्रम् २९ आत्ययिके च ३० सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनंसत्यवचनम् ३१ ४

शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानाम् १ एकादशरात्रं क्षत्रियस्य २ द्वादशरात्रं वैश्यस्य । अर्धमासमेके ३ मासम्शूद्रस्य ४ तच् चेदन्तः पुनरापतेच्छेषेण शुध्येरन् ५ रात्रिशेषे द्वाभ्याम् ६ प्रभाते तिसृभिः ७ गोब्राह्मणहतानामन्वक्षम् ८ राजक्रोधाच् च ९ युद्धे १० प्रायानाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम् ११ पिण्डनिवृत्तिः सप्तमे पञ्चमे वा १२ जननेऽप्येवम् १३ मातापित्रोस्तद्मातुर्वा १४ गर्भमाससमारात्रीः स्रंसने गर्भस्य १५ त्र्यहं वा १६ श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीम् १७ असपिण्डे योनिसंबन्धे सहाध्यायिनि च १८ सब्रह्मचारिण्येकाहम् १९ श्रोत्रिये चोपसंपन्ने २० प्रेतोपस्पर्शने दशरात्रमाशौचमभिसंधाय चेत् २१ उक्तं वैश्यशूद्रयोः २२ आर्तवीर्वा २३ पूर्वयोश्च २४ त्र्यहं वा २५

आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवम् २६ अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत्पूर्वोवावरं तत्र शवोक्तमाशौचम् २७ पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शनेसचैलोदकोपस्पर्शनाच् शुध्येत् २८ शवानुगमने च २९ शुनश्च ३० यदुपहन्यादित्येके ३१ उदकदानं सपिण्डैः कृतचूडस्य ३२ तत्स्त्रीणां च ३३ एके प्रत्तानाम् ३४ अधःशय्यासनिनो ब्रह्मचारिणः सर्वे ३५ न मार्जयीरन् ३६ न मांसं भक्षयेयुरा प्रदानात् ३७ प्रथमतृतीयसप्तमनवमेषूदकक्रिया ३८ वाससां च त्यागः ३९ अन्ते त्वन्त्यानाम् ४० दन्तजन्मादि मातापितृभ्याम् ४१ बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यः शौचम् ४२ राज्ञां च कार्यविरोधात् ४३ ब्राह्मणस्य च स्वाध्यायनिवृत्त्यर्थम्स्वाध्यायनिवृत्त्यर्थम् ४४ ५

अथ श्राद्धम् १ अमावास्यायां पितृभ्यो दद्यात् २ पञ्चमीप्रभृतिषु वापरपक्षस्य ३ यथाश्रद्धं सर्वस्मिन्वा ४ द्रव्यदेशब्राह्मणसंनिधाने वा कालनियमः ५ शक्तितः प्रकर्षेद्गुणसंस्कारविधिरन्नस्य ६ नवावरान्भोजयेदयुजः ७ यथोत्साहं वा ८ श्रोत्रियान्वाग्रूपवयःशीलसंपन्नान् ९ युवभ्यो दानं प्रथमम् १० एके पितृवत् ११ न च तेन मित्रकर्म कुर्यात् १२ पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः १३ तदभाव ऋत्विजाचार्यौ । तिलमाषव्रीहियवोदकदानैर्मासं पितरः- प्रीणन्ति । मत्स्यहरिणरुरुशशकूर्मवराहमेषमांसैःसंवत्सराणि । गव्यपयःपायसैर्द्वादश वर्षाणि । वार्ध्रीणसेनमांसेन कालशाकच्छागलोहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम् १४ न भोजयेत्स्तेनक्लीबपतितनास्तिकतद्वृत्त्यवीरहाग्रेदिधिषुपत्य्स्त्रीग्रामयाजकाजापालोत्सृष्टाग्न्य्मद्यपकुचरकूटसाक्षिप्रातिहारिकान् १५ उपपतिः १६ यस्य च सः १७ कुण्डाश्य्सोमविक्रय्यगारदाहिगरदावकीर्ण्यगणप्रेष्यागम्यागाम्यहिंस्रपरिवित्त्य्परिवेत्तृपर्याहितपर्याधातृत्यक्तात्मदुर्बालकुनख्यश्यावदन्तश्वित्र्य्पौनर्भवकितवाजपराजप्रेष्यप्रातिरूपिकशूद्रापत्यनिराकृत्य्किलास्य्कुसीद्य्वणिक्शिल्पोपजीव्य्ज्यावादित्रतालनृ-

त्यगीतशीलान् १८ पित्रा वाकामेन विभक्तान् १९ शिष्यांश्चैके सगोत्रांश्च २० भोजयेदूर्ध्वं त्रिभ्यः २१ गुणवन्तम् २२ सद्यः श्राद्धी शूद्रातल्पगस्तत्पुरीषे मासंनयति । पितृन् २३ तस्मात्तदहम्ब्रह्मचारी च स्यात् २४ श्वचाण्डालपतितावेक्षणे दुष्टम् २५ तस्मात्परिश्रिते दद्यात् २६ तिलैर्वा विकिरेत् २७ पङ्क्तिपावनो वा शमयेत् २८ पङ्क्तिपावनः षडङ्गविज् ज्येष्ठसामिकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः पञ्चाग्निः स्नातको मन्त्रब्राह्मणविद्धर्मज्ञोब्रह्मदेयानुसंतान इति २९ हविःषु चैवम् ३० दुर्बालादीञ्श्राद्ध एकैके ३१ अकृतान्नश्राद्धे चैवं चैवम् ३२ ६

श्रावणादि वार्षिकं प्रोष्ठपदींवोपाकृत्याधीयीत च्छन्दांसि १ अर्धपञ्च-मान्मासान्पञ्च दक्षिणायनं वा २ ब्रह्मचार्युत्सृष्टलोमा न मांसं भुञ्जीत ३ द्वैमास्यो वा नियमः ४ नाधीयीत वायौ दिवा पांसुहरे ५ कर्णश्रा-विणि नक्तम् ६ वाणभेरीमृदङ्गगर्तार्तशब्देषु ७ श्वशृगालगर्दभसंह्रादे ८ रोहितेन्द्रधनुर्नीहारेषु ९ अभ्रदर्शने चापर्तौ १० मूत्रित उच्चारिते ११ निशायां संध्योदकेषु १२ वर्षति च १३ एके वलीकसंतानाम् १४ आचार्यपरिवेषणे १५ ज्योतिषोश्च १६ भीतो यानस्थः शयानः प्रौढपादः १७ श्मशानग्रामान्तमहापथाशौचेषु १८ पूत्यगन्धा-न्तःशवदिवाकीर्त्यशूद्रसंनिधाने १९ भुक्तके चोद्गारे २० ऋक्यजुषं च सामशब्दो यावत् २१ आकालिका निर्घातभूमिकम्पराहुदर्शनोल्काः २२ स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु २३ अहर्ऋतौ २४ विद्युति नक्तं चापररात्रात् २५ त्रिभागाद्यप्रवृत्तौ सर्वम् २६ उल्का विद्यु-त्समेत्येकेषाम् २७ स्तनयित्नुरपराह्णे २८ अपि प्रदोषे २९ सर्वं नक्तमार्धरात्रात् ३० अहश्चेत्सज्योतिः ३१ विषयस्थे च राज्ञि प्रेते ३२ विप्रोष्य चान्योन्येन सह ३३ संकुलोपाहितवेदसमाप्तयच्छरद्यश्रा-द्धमनुष्ययज्ञभोजनेष्वहोरात्रम् ३४ अमावास्यायां च ३५ द्व्यहं वा ३६ कार्तिकी फाल्गुन्याषाढी पौर्णमासी ३७ तिस्रोऽष्टकास्त्रिरात्रम् ३८ अन्त्यामेके ३९ अभितो वार्षिकम् ४० सर्वे वर्षाविद्युत्स्त-

नयित्नुसंनिपाते ४१ प्रस्यन्दिनि ४२ ऊर्ध्वं भोजनादुत्सवे ४३ प्राधीतस्य च निशायां चतुर्मुहूर्तम् ४४ नित्यमेके नगरे ४५ मानसमप्यशुचिः ४६ श्राद्धिनामाकालिकम् ४७ अकृतान्नश्राद्धिकसंयोगेऽपि ४८ प्रतिविद्यं च यान्स्मरन्ति ४९ ७

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत १ प्रतिगृह्णीयाच् । च २ एधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधानाशफरीप्रियङ्गुस्रज्मार्गशाकान्यप्रणोद्यानि सर्वेषाम् ३ पितृदेवगुरुभृत्यभरणेऽप्यन्यत् ४ वृत्तिश्चेद्नान्तरेण शूद्रात् ५ पशुपालक्षेत्रकर्षककुलसंगतकारयितृपरिचारकाःभोज्यान्नाः ६ वणिक्चाशिल्पी ७ नित्यमभोज्यम् ८ केशकीटावपन्नम् ९ रजस्वलाकृष्णशकुनिपदोपहतम् १० भ्रूणघ्नावेक्षितम् ११ भावदुष्टम् १२ गवोपघ्रातम् १३ शुक्तं केवलमदधि १४ पुनः सिद्धम् १५ पर्युषितमशाकभक्षस्नेहमांसमधूनि १६ उत्सृष्टपुंश्चल्यभिशस्तानपदेश्यदण्डकतक्षकदर्यबन्धनिकचिकित्सकमृगय्वनिषुचार्य्युच्छिष्टभोजिगणविद्विषाणानाम् १७ अपङ्क्त्यानां प्राग्दुर्वालात् १८ वृथान्नाचमनोत्थानव्यपेतानि १९ समासमाभ्यां विषमसमे पूजातः २० अनर्चितं च २१ गोश्च क्षीरमनिर्दशायाः सूतके २२ अजामहिष्योश्च २३ नित्यमाविकमपेयमौष्ट्रमैकशफं च २४ स्यन्दिनीयमसूसंधिनीनां च २५ विवत्सायाश्च २६ पञ्चनखाश्चाशल्यकशशश्वाविद्गोधाखड्गकच्छपाः २७ उभयतोदत्केश्यलोमैकशफकलविङ्कप्लवचक्रवाकहंसाः २८ काककङ्कगृध्रश्येना जलजा रक्तपादतुण्डाग्राम्यकुक्कुटसूकराः २९ धेन्वनडुहौ च ३० अपन्नदन्नवसन्नवृथामांसानि ३१ किसलयक्याकुलशुननिर्यासाः ३२ लोहिता व्रश्चनाः ३३ निचुदारुबकबलाकाशुकमद्गुटिट्टिभमान्धालनक्तचराअभक्ष्याः ३४ भक्ष्याः प्रतुदविष्किरजालपादाः ३५ मत्स्याश्चाविकृताः ३६ वध्याश्च धर्मार्थे ३७ व्यालहतादृष्टदोषवाक्प्रशस्तानभ्युक्ष्योपयुञ्जीतोपयुञ्जीत ३८ ८

अस्वतन्त्रा धर्मे स्त्री १ नातिचरेद्भर्तारम् २ वाक्चक्षुःकर्मसंयता ३ अपतिरपत्यलिप्सुर्देवरात् ४ गुरुप्रसूता नर्तुमतीयात् ५ पिण्डगो-त्रर्षिसंबन्धेभ्यो योनिमात्राद्वा ६ नादेवरादित्येके ७ नातिद्वितीयम् ८ जनयितुरपत्यम् ९ समयादन्यस्य १० जीवतश्च क्षेत्रे ११ परस्मात्तस्य १२ द्वयोर्वा १३ रक्षणात्तु भर्तुरेव १४ श्रूयमाणेऽभिगमनम् १५ प्रव्रजिते । तु निवृत्तिः प्रसङ्गात् १६ द्वादश वर्षाणि ब्राह्मणस्य विद्यासंबन्धे १७ भ्रातरि चैवम्ज्यायसि यवीयान्कन्याग्न्युपयमेषु १८ षड् इत्येके १९ त्रीन्कुमार्यृतूनतीत्य । स्वयंयुज्येत । अनिन्दितेनोत्सृज्य । पित्र्यानलंकारान् २० प्रदानं प्राग् ऋतोः २१ अप्रयच्छन् । दोषी २२ प्राग् वाससः प्रतिपत्तेरित्येके २३ द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगेच शूद्रात् २४ अन्यत्रापि शूद्राद्बहुपशोर्हीनकर्मणः २५ शतगोरनाहिताग्नेः २६ सहस्रगोश्चासोमपात् २७ सप्तमीं चाभुक्त्वा । अनिचयाय २८ अप्यहीनकर्मभ्यः २९ आचक्षीत । राज्ञा पृष्टः ३० तेन हि भर्तव्यः । श्रुतशीलसंपन्नश्चेत् ३१ धर्मतन्त्रपीडायां तस्या-करणे दोषो ३२ ९ २

उक्तो । वर्णधर्मश्चाश्रमधर्मश्च १ अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यतेयथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनंशिष्टस्याक्रिया प्रतिषिद्धसेवनमिति २ तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते ३ न कुर्यादित्याहुः ४ न हि कर्म क्षीयत । इति ५ कुर्याद् । इत्यपरम् ६ पुनःस्तोमेनेष्ट्वा । पुनः सवनमायान्तीति विज्ञायते ७ व्रात्य-स्तोमैश्चेष्ट्वा ८ तरति । सर्वं पाप्मानं तरति । ब्रह्महत्यांयोऽश्वमेधेन यजते ९ अग्निष्टुताभिशस्यमानं याजयेद् । इति च १० तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम् ११ उपनिषदो वेदान्तः सर्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्वशिरो रुद्राः पुरुषसूक्तं राजतरौहिने सामनीबृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यंज्येष्ठसाम्नामन्यतमद्बहिष्पवमानं कूष्माण्डानि पावमा-न्यःसावित्री चेति पावमानानि १२ पयोव्रतता शाकभक्षता फलभक्ष-

ताप्रसृतयावको हिरगयप्राशनं घृतप्राशनं सोमपानमितिमेध्यानि १३ सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुगया ह्रदास्तीर्थान्यृषिनिवासा गोष्ठपरिस्कन्धा इति देशाः १४ ब्रह्मचर्यं सत्यवचनं सवनेषूदकोप-स्पर्शनमार्द्रवस्त्रताधःशायितानाशक इति तपांसि १५ हिरगयं गौर्वा-सोऽश्वो भूमिस्तिला घृतमन्नमितिदेयान्यिति १६ संवत्सरः षगमासा-श्चत्वारस्त्रयो वा द्वौवैकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र इतिकालाः १७ एतान्येवानादेशे विकल्पेन क्रियेरन् १८ एनःसु गुरुषु गुरूणि लघुषु लघूनि १९ कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तं २० १

त्यजेत् । पितरं राजघातकं शूद्रयाजकंशूद्रार्थयाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिःसह संवसेद् । अन्त्यावसायिन्यां च १ तस्य विद्यागुरून्योनिसंबन्धांश्च संनिपात्य । उदकादीनि प्रेतकार्याणि कुर्युः २ पात्रं चास्य विपर्यस्येयुः ३ दासः कर्मकरो वावकरादमे-ध्यपात्रमानीय । दासीघटात्पूरयित्वा । दक्षिणामुखो यदा विपर्यस्येद् । अमुकमनुदकंकरोमि । इति नामग्राहम् ४ तं सर्वेऽन्वालभे-रन्प्राचीनावीतिनो मुक्तशिखाः ५ विद्यागुरवो योनिसंबन्धाश्च वीक्षेरन् ६ अप उपस्पृश्य । ग्रामं प्रविशन्ति ७ अत उत्तरं तेन संभाष्य । तिष्ठेद् । एकरात्रं जपन् । सावित्रीमज्ञानपूर्वम् ८ ज्ञानपूर्वं च त्रिरात्रम् ९ यस्तु प्रायश्चित्तेन शुध्येत्तस्मिञ् शुद्धेशातकुम्भमयं पात्रं पुगयतमाद्ध्रदात्पूरयित्वा स्रवन्तीभ्योवा तत एनमप उपस्पर्शयेयुः १० अथास्मै तत्पात्रम्दद्युस् । ततप्रतिगृह्य जपेच्शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्ताभमम्गृह्णामि । इति ११ एतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिःकूष्मागडैश्चाज्यं जुहुयाधिरगयं ब्राह्मणाय-दद्यात् १२ गां वा १३ आचार्याय च १४ यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतःशुध्येत् १५ सर्वागयेव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युः १६ एतदेव शान्त्युदकं सर्वेषूपपातकेषुसर्वेषूपपातकेषु १७ २

ब्रह्महसुरापगुरुतल्पगमातृपितृयोनिसंबन्धागस्तेननास्तिकनिन्दितक-र्माभ्यास्यपतितात्याग्यपतितत्यागिनः पतिताः १ पातकसंयोजकाश्च २ तैश्चाब्दं समाचरन् ३ द्विजातिकर्मभ्यो हानिः पतनम् ४ तथा परत्र चासिद्धिः ५ तमेके नरकम् ६ त्रीणि प्रथमान्यनिर्देश्यान्यनु ७ न स्त्रीष्वगुरुतल्पं पततीत्येके ८ भ्रूणहनि हीनवर्णसेवायां च स्त्रीपतति ९ कौटसाक्ष्यं राजगामि पैशुनम्गुरोरनृताभिशंसनं महापातकसमानि १० अपङ्क्त्यानां प्राग्दुर्बालाद्गोहन्तृब्रह्मघ्नतन्मात्रकृदवकीर्ण्यपतितसा-वित्रीकेषूपपातकम् ११ अज्ञानादन्ध्यापनादृत्विजाचार्यौपतनीयसेवायां च हेयौ १२ अन्यत्र हानात्पतति १३ तस्य च प्रतिग्रहीतेत्येके १४ न कर्हिचिद्मातापित्रोरवृत्तिः १५ दायं तु न भजेरन् १६ ब्राह्मनाभिशंसने दोषस्तावान् १७ द्विरनेनसि १८ दुर्बलहिंसायां च विमोचने शक्तश्चेत् १९ अभिक्रुद्धावगोरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यम् २० निघाते सह-स्रम् २१ लोहितदर्शने यावतस्तत्प्रस्कन्द्य पांसून्संगृह्णीयात् २२ ३

प्रायश्चित्तम् १ अग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य २ लक्ष्यं वा स्यात् । जन्ये शस्त्रभृताम् ३ खट्वाङ्गकपालपाणिर्वा द्वादश संवत्सरा-न्ब्रह्मचारी भैक्षाय ग्रामं प्रविशेत् । कर्माचक्षाणः ४ पथोऽपक्रा-मेत्संदर्शनादार्यस्य ५ स्थानासनाभ्यां विहरन्सवनेषूदकोपस्पर्शी-शुध्येत् ६ प्राणलाभे वा तन्निमित्ते ब्राह्मणस्य ७ द्रव्यापचये त्र्यवरं प्रतिराद्धः ८ अश्वमेधावभृथे वा ९ अन्ययज्ञेऽप्यग्निष्टुदन्तश्चेत् १० सृष्टश्चेद्ब्राह्मणवधेऽहत्वापि ११ आत्रेय्याञ् चैवम् १२ गर्भे चाविज्ञाते १३ राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यमृषभैकसहस्राश्च गा दद्यात् १४ वैश्ये तु त्रैवार्षिकमृषभैकशताश्च गादद्याद् १५ शूद्रे संवत्सरमृ-षभैकादशाश्च गा दद्यात् १६ अनात्रेय्यां चैवम् १७ गां च वैश्यवत् १८ मण्डूकनकुलकाकबिम्बदहरमूषकश्वहिंसासुच १९ अस्थन्वतां सहस्रं हत्वा २० अनस्थिमतामनडुद्भारे च २१ अपि वास्थन्वता-मेकैकस्मिन्किंचिद्दद्यात् २२ षण्ढे पलालभारः सीसमाषश्च २३ वराहे घृतधटः २४ सर्पे लोहदण्डः २५ ब्रह्मबन्ध्वां चलनायां नीलः २६

वैशिकेन किंचित् २७ तल्पान्नधनलाभवधेषु पृथग्वर्षाणि २८ द्वे परदारे २९ त्रीणि श्रोत्रियस्य ३० द्रव्यलाभे चोत्सर्गः ३१ यथास्थानं वा गमयेत् ३२ प्रतिषिद्धमन्त्रयोगे सहस्रवाकश्चेत् ३३ अग्न्युत्सादि-निराकृत्युपपातकेषु चैवम् ३४ स्त्री यातिचारिणी गुप्ता पिण्डं तु लभेत ३५ अमानुषीषु गोवर्जं स्त्रीकृते कूष्माण्डैर्घृतहोमोघृतहोमः ३६ ४

सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः । सुरामास्येमृतः शुध्येत् १ अमत्या पाने पयो घृतमुदकं वायुं प्रतित्र्यहंतप्तानि स कृच्छ्रस्ततोऽस्य संस्कारः २ मूत्रपुरीषरेतसां च प्राशने ३ श्वापदोष्ट्रखराणां चाङ्गस्य ४ ग्राम्य-कुक्कुटसूकरयोश्च ५ गन्धाघ्राणे सुरापस्य प्राणायामा घृतप्राशनं च ६ पूर्वैश्च दष्टस्य ७ तप्ते लोहशयने गुरुतल्पगः शयीत ८ सूर्मीं वा श्लिष्येज्ज्वलन्तीम् ९ लिङ्गं वा सवृषणमुत्कृत्य । अञ्जलावाधाय । दक्षिणाप्रतीचीं व्रजेद् । अजिह्मा शरीरनिपातात् १० मृतः शुध्येत् ११ सखीसयोनिसगोत्राशिष्यभार्यासु सुनुषायां गवि चगुरुतल्पसमः १२ अवकर इत्येके १३ श्वभिरादयेद् । राजा निहीनवर्णगमने स्त्रियंप्रकाशम् १४ पुमांसं घातयेत् १५ यथोक्तं वा १६ गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत् १७ तस्याजिनमूर्ध्वबालं परि-धाय लोहितपत्रः सप्तगृहान्भिक्षं चरेत् । कर्माचक्षाणः १८ संवत्सरेण शुध्येत् १९ रेतःस्कन्दने भये रोगे स्वप्नेऽग्नीन्धनभैक्षचरणानि सप्तरा-त्रमकृत्वाज्यहोमः समिधो वारेतस्याभ्याम् २० सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन् । सावित्रीम् २१ अशुचिं दृष्ट्वा । आदित्यमीक्षेत । प्राणायामं कृत्वा २२ अभोज्यभो-जनेऽमेध्यप्राशने वा निष्पुरीषीभावः २३ त्रिरात्रावरमभोजनम् २४ सप्तरात्रं वा स्वयंशीर्णान्युपभुञ्जानः । फलान्यनतिक्रामन् २५ प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च २६ आक्रोशानृतहिंसासु त्रिरात्रं परमं तपः २७ सत्यवाक्ये वारुणीमानवीभिर्होमः २८ विवाहमैथुन-नर्मार्तसंयोगेष्वदोषमेकेऽनृतम् २९ न तु खलु गुर्वर्थेषु ३० सप्त पुरु-षानितश्च परतश्च हन्ति । मनसापिगुरोरनृतं वदन्न् । अल्पेष्वप्यर्थेषु

३१ अन्त्यावसायिनीगमने कृच्छ्राब्दः ३२ अमत्या द्वादशरात्रः ३३ उदक्यागमने त्रिरात्रस् ३४ ५

रहस्यं प्रायश्चित्तमविख्यातदोषस्य १ चतुर्ऋचं तरत्समन्दीत्यप्सु जपेद् । अप्रतिग्राह्यंप्रतिजिघृक्षन् । प्रतिगृह्य । वा २ अभोज्यं बुभुक्षमाणः । पृथिवीमावपेत् ३ ऋत्वन्तरारमण उदकोपस्पर्शनाच्छुद्धिमेके ४ स्त्रीषु ५ पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेकभक्तिको जलक्लिन्नवासा लोमानि नखानि त्वचम्मांसं शोणितं स्नाय्वस्थि मक्तनमिति होमा आत्मनो मुखे मृत्योरास्येजुहोम्यित्यन्ततः सर्वेषां प्रायश्चित्तं भ्रूणहत्यायाः ६ अथान्यत् ७ उक्तो नियमः ७ अग्ने त्वं पारयेति महाव्याहृतिभिर्जुहुयात् । कूष्माण्डैश्चाज्यम् ८ तद्व्रत एव वा ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषुप्राणायामैस्तान्तोऽघमर्षणं जपन् । सममश्वमेधावभृथेनेदंच प्रायश्चित्तम् ९ सावित्रीं वा सहस्रकृत्व आवर्तयन् । पुनीतै्वात्मानम् १० अन्तर्जले वाघमर्षणं त्रिरावर्तयन् । सर्वपापेभ्यो विमुच्यते ११ ६

तदाहुः । कतिधावकीर्णी प्रविशतीति १ मरुतः प्राणेनेन्द्रे बलेन बृहस्पतिंब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेणेति २ सोऽमावास्यायां निश्यग्निमुपसमाधाय । प्रायश्चित्ताज्याहुतीर्जुहोति ३ कामावकीर्णोऽस्म्यवकीर्णोऽस्मि । कामकामायस्वाहा । कामाभिदुग्धोऽस्मि । अभिदुग्धोऽस्मि कामकामाय स्वाहेतिसमिधमाधाय । अनुपर्युक्ष्य। यज्ञवास्तु कृत्वोपोत्थायसमासिञ्चतु । इत्येतया त्रिरुपतिष्ठेत । सं मा सिञ्चन्तूपतिष्ठेत् ४ त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्याइति ५ एतदेवैकेषाम्कर्माधिकृत्य योऽप्रयत इव स्यात् । सैत्थं जुहुयाद् । इत्थमनुमन्त्रयेत । वरो दक्षिणेति प्रायश्चित्तमविशेषात् ६ अनार्जवपैशुनप्रतिषिद्धाचारानाद्यप्राशनेषुशूद्रायां च रेतः सिक्त्वा । अयोनौ च दोषवति च कर्मण्यपिसंधिपूर्वेऽब्लिङ्गाभिरप उपस्पृशेद् । वारुणीभिरन्यैर्वापवित्रैः ७ प्रतिषिद्धवाङ्मनसापचारे व्याहृतयः पञ्चस-

त्यान्ताः ८ सर्वास्वपो वाचामेद् । अहश्च मादित्याश्च पुनातु । इति प्राता रात्रिश्च मा वरुणश्च पुनात्विति सायम् ९ अष्टौ वा समिध आदध्याद् । देवकृतस्येति हुत्वा । एव सर्वस्मादेनसो मुच्यते १० ७

अथातः कृच्छ्रान्व्याख्यास्यामः १ हविष्यान्प्रातराशान्भुक्त्वा । तिस्रो रात्रीर्नाश्नीयात् २ अथापरं त्र्यहं नक्तं भुञ्जीत ३ अथापरं त्र्यहं न कंचन याचेत ४ अथापरं त्र्यहमुपवसेत् ५ तिष्ठेद् । अहनि रात्रावासीत । क्षिप्रकामः ६ सत्यं वदेत् ७ अनार्यैर्न संभाषेत ८ रौरवयौधाजपे नित्यं प्रयुञ्जीत ९ अनुसवनमुदकोपस्पर्शनमापो हि ष्ठेतितिसृभिः पवित्रवतीभिर्मार्जयीत । हिरण्यवर्णाः शुचयःपावका इत्यष्टाभिः १० अथोदकतर्पणम् ११ नमोऽहमाय मोहमाय मंहमाय धन्वते तापसायपुनर्वसवे नमः । नमो मौञ्ज्यायोर्व्याय वसुविन्दाय सार्वविन्दायनमः । नमः पाराय सुपाराय महापाराय वारयिष्णवे नमः । नमोरुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतयेहराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमः । नमः सूर्यायादित्याय नमः । नमो नीलग्रीवाय शितिकण्ठाय नमः । नमः कृष्णाय पिङ्गलाय नमः । नमो ज्येष्ठाय वृद्धायेन्द्रायहरिकेशायोर्ध्वरेतसे नमः । नमः सत्याय पावकाय पावकवर्णायकामाय कामरूपिणे नमः । नमो दीप्ताय दीप्तरूपिणे नमः । नमस्तीक्ष्णाय तीक्ष्णरूपिणे नमः । नमः सोभ्याय सुपुरुषायमहापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमः । नमश्चन्द्रललाटाय कृत्तिवाससे नमः १२ एतदेवादित्योपस्थानम् १३ एता एवाज्याहुतयः १४ द्वादशरात्रस्यान्ते चरुं श्रपयित्वा । एताभ्योदेवताभ्यो जुहुयात् १५ अग्नये स्वाहा सोमाय स्वाहाग्निषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नयेस्विष्टकृत इति १६ ततो ब्राह्मणतर्पणम् १७ एतेनैवातिकृच्छ्रो व्याख्यातः १८ यावत्सकृदाददीत । तावदश्नीयात् १९ अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः २० प्रथमं चरित्वा । शुचिः पूतः कर्मण्यो

भवति २१ द्वितीयं चरित्वा । यत्किंचिदन्यन्महापातकेभ्यःपापं कुरुते तस्मात्प्रमुच्यते २२ तृतीयं चरित्वा । सर्वस्मादेनसो मुच्यते २३ अथैतांस्त्रीन्कृच्छ्रांश्चरित्वा । सर्वेषु वेदेषुस्नातो भवति सर्वैर्देवैर्ज्ञातो भवति २४ यश्चैवं वेद २५ ८

अथातश्चान्द्रायणम् १ तस्योक्तो विधिः कृच्छ्रे २ वपनं व्रतं चरेत् ३ श्वोभूतां पौर्णमासीमुपवसेत् ४ आप्यायस्व सं ते पयांसि नवोनव इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसः ५ यद्दे-वा देवहेडनमिति चतसृभिर्जुहुयात् ६ देवकृतस्येति चान्ते समिद्भिः ७ ओं भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूर्गिडौजस्तेजो वर्चः पुरुषो धर्मः शिव इत्येतैर्ग्रासानुमन्त्रणंप्रतिमन्त्रं मनसा ८ नमः स्वाहेति वा सर्वान् ९ ग्रासप्रमाणमास्याविकारेण १० चरुभैक्षसक्तुकणयावकशाकपय-ोदधिघृतमूलफलोदकानिहवींस्युत्तरोत्तरं प्रशस्तानि ११ पौर्णमास्यां पञ्चदश ग्रासान्भुक्त्वा । एकापचयेनापरपक्षमश्नीयात् १२ अमावा-स्यायामुपोष्यैकोपचयेनपूर्वपक्षम् १३ विपरीतमेकेषाम् १४ एवं चान्द्रायणो मासः १५ एवमाप्त्वा । विपापो विपाप्मा सर्वमेनोहन्ति १६ द्वितीयमाप्त्वा । दश पूर्वान्दश परानात्मानंचैकविंशं पङ्क्तिं च पुनाति १७ संवत्सरं चाप्त्वा । चन्द्रमसः सलोकतामाप्नोति । सलोकतामाप्नोति १८ ९

ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन् १ निवृत्ते रजसि मातुर्जीवतिचेच्छति २ सर्वं वा पूर्वजस्येतरान्बिभृयात् । पितृवत् ३ विभागे तु धर्मवृद्धिः ४ विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथोगोवृषः ५ काण-खोरकूटवणेता मध्यमस्यानेकाश्चेत् ६ अविर्धान्यायसी गृहमनो युक्तं चतुष्पादंचैकैकं यवीयसः ७ समधा चेतरत्सर्वम् द्व्यंशी वा पूर्वजस्य एकैकमितरेषाम् ८ एकैकं वा धनरूपं काम्यं पूर्वः पूर्वोलभते ९ दशकं पशूनाम् १० नैकशफद्विपदाम् ११ ऋषभोऽधिको ज्येष्ठस्य १२ ऋषभषोडशा ज्यैष्ठिनेयस्य १३ समधा वाज्यैष्ठिनेयेन

यवीयसाम् १४ प्रतिमातृ वा स्वस्ववर्गे भागविशेषः १५ पितोत्सृजेत् । पुत्रिकां ग्रनपत्योऽग्निंप्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्य १६ ग्रभिसंधिमात्रात्पुत्रिकेत्येकेषाम् १७ तत्संशयान्नोपयच्छेद् । ग्रभ्रातृकाम् १८ पिराडगोत्रर्षिसंबन्धा रिक्थं भजेरन् । स्त्रीवानपत्यस्य १९ बीजं वा लिप्सेत २० देवरवत्यामन्यजातमभागम् २१ स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठिताणां च २२ भगिनीशुल्कः सोदर्याणामूर्ध्वं मातुः २३ पूर्वं चैके २४ ग्रसंसृष्टिविभागः प्रेतानां ज्येष्ठस्य २५ संसृष्टिनि प्रेते संसृष्टी रिक्थभाक् २६ विभक्तजः पित्र्यमेव २७ स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात् २८ ग्रवैद्याः समं विभजेरन् २९ पुत्राग्रौरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः ३० कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयंदत्तक्रीता गोत्रभाजः ३१ चतुर्थांशिन ग्रौरसाद्यभावे ३२ ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठो गुणसंपन्नस्तुल्यभाक् ३३ ज्येष्ठांशहीनमन्यत् ३४ राजन्यावैश्यापुत्रसमवाये यथा सब्राह्मणीपुत्रेण ३५ क्षत्रियाच् चेत् ३६ शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभतेवृत्तिमूलमन्तेवासिविधिना ३७ सवर्णापुत्रोऽप्यन्याय्यवृत्तो न लभेतैकेषाम् ३८ श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन् ३९ राजेतरेषाम् ४० जग्रक्लीबौ भर्तव्यौ ४१ ग्रपत्यं जडस्य भागार्हम् ४२ शूद्रापुत्रवत्प्रतिलोमासु ४३ उदकयोगक्षेमकृतान्नेष्वविभागः ४४ स्त्रीषु च संयुक्तासु ४५ ग्रनाज्ञाते दशावरैः शिष्टैरूहविद्भिरलुब्धैः प्रशस्तं कार्यम् ४६ चत्वारश्चतुर्णां पारगा वेदानां प्राग् उत्तमात्त्रय ग्राश्रमिणः पृथग् धर्मविदस्त्रय एतान्दशावरान्परिषदित्याचक्षते ४७ ग्रसम्भवे त्वेतेषां श्रोत्रियो वेदविच्छिष्टोविप्रतिपत्तौ यदाह ४८ यतोऽयमप्रभवो भूतानां हिंसानुग्रहयोगेषु ४९ धर्मिणां विशेषेण स्वर्गं लोकं धर्मविदाप्नोतिज्ञानाभिनिवेशाभ्याम् ५० इति धर्मो धर्मः ५१ १० ३

Credits
Sources: *Gautamīya-Dharmasūtra,* Ānandāśrama Sanskrit Series 61, 1966
Typescript: Originally input by Nobuyuki Watase under the guidance of Yasuke Ikari
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection